*दारुकसेरु (लि० सू० ५८)। जत्वादित्वादुप्रत्ययान्ता एते।

*कंसं चाप्राणिनि [लि० सू० ९९]। कंसमिति शब्दस्य निर्देशान्नपुंसके चेत्यस्य संबन्धः। अप्राणिनि वाच्ये कंसशब्द इत्यर्थः।

*दिनाहनी [ लि० सू० १०२ ]। दिवसाभिधानाविमौ।

*खारीमानिके [लि० सू० १०५]। मानाभिधानत्वात् पुंस्त्वे प्राप्तेऽस्यारम्भः।

*बहुत्वञ्चेति। चकारः पुंस्त्वस्य समुच्चायकः।

*नाऽव्ययजनोपपदानि व्रणाङ्गपदानि ( लि० सू० १०७ )। अत्रोपपदशब्दः पूर्वपदपरो न तु "तत्रोपपदम्" [पा० सू० ३-१-९२ ] इति तत्संज्ञकपरः। तस्य प्राप्त्यभावात्। *क्लीबत्वनिवृत्त्यर्थमिति। नपुंसकाधिकारे "मुखनयन" (लि० सू० १३०)इत्यादिवक्ष्यमाणसूत्रेण विवराभिधानत्वेन क्लीबत्वं प्राप्तं तन्निवृत्त्यर्थमित्यर्थः।

*अमरस्त्विति। एवञ्च तन्मतेऽर्धर्चादिष्वयं द्रष्टव्यः। इति पुँल्लिङ्गाधिकारः।

## अथ नपुंसकाधिकारः

*भावे ल्युडन्तः( लि० सू० ११९ ) इदञ्च सूत्रं यद्यपि "नपुंसके भावे क्तः"(पा०सू० ३-२-१११)"ल्युट् च"। (पा०सू० ३-३-११५) इत्यनेन गतार्थं तथापि स्पष्टार्थमुपात्तम्। एवमन्तग्रहणं चेति बोध्यम्।

*इध्मप्रव्रश्चन इति। अत्र करणे ल्युट्।

*निष्ठा च ( लि० सू० १२० )। अत्र निष्ठापदं क्तस्य बोधकम्। इदमपि सूत्रं "नपुंसके भावे क्तः" (पा० सू० ३-७-१११) इत्यनेन गतार्थम्। प्रत्ययग्रहणे तदन्तग्रहणम्।

*त्वष्यञौ तद्धितौ (लि० सू० १२१)। भावे इत्यनुवर्त्तते। यद्यपि "तस्य भावः"(पा० सू० ५-१-११९ )इति सूत्रे भावशब्दः प्रकृतिजन्यबोधीयप्रकारताश्रयधर्मपरः,भावे ल्युडन्त इत्यत्र तु भावशब्दो भावनाबोधक इति भेदस्तथापीह भावशब्दः शब्दाधिकारेणान्यार्थको द्रष्टव्यः।

*कर्मणि च [लि० सू० १२२]। चाद्भावे। त्वष्यञावित्याद्यनुवर्त्तते। "स्तेनाद्यन्नलोपश्च"(का० वा०) इति। यद्यपीदं सूत्रं प्राग् व्याख्यातमेव तथापीतः प्रभृति कथितानां नपुंसकत्वस्य स्पष्टप्रतिपत्त्यर्थमिहोपादानमिति बोध्यम्।

द्वन्द्वैकत्वम्(लि० सू० १२४) इति। "द्वन्द्वश्च प्राणितूर्य" [लि० सू० १२४] इत्यादिना येषां द्वन्द्वानामेकवद्भावो भवति ते द्वन्द्वा नपुंसकत्वाभिधायका बोध्या इत्यर्थः।

*अभाषायाम् (लि० सू० १२५) इति। इदमपि सूत्रं "हेमन्तशिशिरावहोरात्रे च च्छन्दसि"[ पा० सू० २-४-२८] इतिसूत्रे छन्दसीत्युपादानेन गता[illegible] हेमन्तशिशिरावित्यत्र तु निर्देशादेव पुंस्त्वप्रतिपादकता बोध्या।

*स्त्रियाञ्चेति । चेन नपुंसकमित्यनुकर्षः । "विभाषासेना" (पा० सू० २-४-२५) इति विभाषापदोपादानेनेदमपि गतार्थम् ।

*परवत् (लि०सू० १३०)इति । "परवल्लिङ्गम्"(पा०सू० २-४-२६) इति सूत्रोपात्त इत्यर्थः । परवदिति सूत्रस्य स्मारकमिह परवदिति न त्विदमपूर्वम् । *तत्पुरुष इति । द्वन्द्वस्याप्युमलक्षणम् ।

*संख्यापूर्वा रात्रिः [लि० सू० १३२] । "संख्यापूर्वं रात्रं क्लीबम्" [का० वा० ] इत्यस्यानुवादः ।

द्विगुः स्त्रियाञ्च (लि० सू० १३३) इति । चान्नपुंसकमिति सम्बध्यते । इदमपि "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" [का० वा०] "पात्राद्यन्तस्य न" [का० वा०]इत्यनेन गतार्थम् । अत एवाह—*व्यवस्थयेति ।

*इसुसन्तः(लि०सू० १३४) । "अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः" "जनेरुसिः" [उ० पा० २ सू० २७३, २८०] एतयोरुपात्तावेतौ ।

*छदिः स्त्रियामेव (लि० सू० १३६) । यद्यपि छदिरित्यस्येसन्तत्वेन नपुंसकत्वे प्राप्ते विशेषोपादानेन 'स्त्रियाम्' इत्यनेनैव नित्यं स्त्रीत्वलाभे सिद्धे एवकारो व्यर्थस्तथापि 'पटलं छदिः' इत्यमरग्रन्थदर्शनेन साहचर्यान्नपुंसकत्वमपीति भ्रान्तिः स्यात्तन्निवारणायैवकारः । अत एव वक्ष्यति-*अमरव्याख्यातार इति ।

*अस्य="मुखनयन" [लि० सू० १३७] इति सूत्रस्य ।

*सीरार्थौदनाः [ लि० सू० १३८ ] । सीरशब्दो हलाभिधानः । अर्थशब्दस्तु धनशब्दस्य पर्यायः । ओदनशब्दोऽन्नवाची । भिस्साभिस्सटाशब्दौ तु दग्धान्नपराविति तयोः स्त्रीत्वेऽपि न क्षतिरिति ।

*अटवी स्त्रियाम् [ लि० सू० १४० ] । अयं वनाभिधानः ।

*सङ्ख्येति । सङ्ख्यावाचीत्यर्थः ।

*शतायुत (लि० सू० १४५) । अयं शतशब्दोऽनन्तवाची । "शतादिः" (लि० सू० १४४) इति पूर्वसूत्रापवादोऽयम् ।

लक्षा कोटिः [लि०सू० १४६] । एतयोरपि सङ्ख्यावाचकत्वान्नपुंसकत्वे प्राप्ते इदम् । *क्लीबेऽपीति । एवञ्चायमर्धर्चादिषु द्रष्टव्यः ।

*शङ्कुः पुंसि [ लि० सू० १४७ ] । अस्य शङ्कुशब्दस्य सङ्ख्याविशेषवाचकत्वात् "शतादिः सङ्ख्या" (लि० सू० १४४) इति नपुंसकत्वे प्राप्तेऽस्यारम्भः । *सहस्रः क्वचित् । *क्वचिदिति । अर्थविशेष इत्यर्थः । 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इत्यत्रानन्तवाची । न चात्र सहस्रशब्दस्यानन्तपरत्वे सङ्ख्यापरत्वाभावेन सहस्रपादित्यत्र "सङ्ख्यासुपूर्वस्य"(पा० सू० ५-४-१७०) इति पादशब्दान्त्यलोपो न स्यादिति वाच्यम् । नियतविषयपरिच्छेदकत्वरूपसङ्ख्यात्वाभावेऽपि यथाकथञ्चित्सङ्ख्यायाः प्रतीतिरिति लोपः । वस्तुतश्छान्दसो लोप इति तूचितम् ।

*मन्द्व्यचकः (लि०सू० १४८) । अत्र मन्प्रत्ययः श्रूयमाणनकारान्[illegible] "सर्वधातुभ्यो मनिन्" [ उ० पा० ४ सू० ५९४ ] इति विहितः । *वर्मचर्म[illegible]

स्वरादिधातोर्मनिन् प्रत्ययः। बाहुलकादिडभावः। अणिमादौ त्विट्। दामेत्यत्रापि "सर्वधातुभ्यो मनिन्"(उ०पा० ४ सू० ५९४) इत्यनेनैव मनिन्। परन्त्वयं विशेषः-उणादिप्रत्ययान्तानां संज्ञाशब्दत्वेन यादृशी व्युत्पत्तिर्यत्रोचिता सा कल्पनीयेति कर्त्तर्यपि प्रत्ययः सम्भवतीति।

*ब्रह्मेति। "बृंहेर्नोऽच्च"(उ० पा० ४ सू० ५९५) इति मनिन् प्रत्ययः।

असन्तो द्व्यच्कः (लिं० सू० १५१)। "सर्वधातुभ्योऽसुन्"[उ० पा०४ सू० ६३८] इति विहितोऽसुन्। तस्यासुनो येष्वनुवृत्तिस्तदन्ता अपि बोध्याः। "चन्द्रे मो डित्"(उ०पा० ४ सू०६७७,इति विहितासुन्प्रत्ययान्तश्चन्द्रमस्शब्दोऽप्यसुन्नन्तः, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्। एवमप्सरःशब्दोऽपि।

त्रान्तः ( लिं० सू० १५३ )। त्रप्रत्ययान्तो नपुंसकं स्यात्। "सर्वधातुभ्यष्ट्रन्"(उ० पा० ४ सू० ६०८) इति त्रन्प्रत्ययो नकारानुबन्धक इति।

*यात्रामात्रा ( लिं० सू० १५४ )। "हुयामा" (उ० पा०-४ सू० ६१७ ) इतिविहितत्रन्प्रत्ययोऽपि त्रग्रहणेन गृह्यतेति नपुंसकत्वे प्राप्तेऽस्यारम्भः। एवकारो न्यायसिद्धबाध्यबाधकभावानुवादकः।

*भृत्रामित्र (लिं० सू० १५५)। पूर्वेऽ(पवादः। *यस्त्विति। दोषान्तरमित्यन्ता तदुक्तिः। *मध्योदात्तः=मकारेकारस्य प्रत्ययाद्युदात्तत्वेन मध्योदात्त इति तद्भावः। *चिन्त्य इति। चित्त्वस्य सत्त्वात्। नन्वमित्रशब्दो नेत्रन्तः, किन्तु "अमिचिमि" (उ०पा०४सू०)इति मिधातुविहितक्त्रान्तमित्रशब्देन नञः समासे सति सिद्ध इत्यत आह-*नञ्समासेऽप्येवमिति। अन्तोदात्त इत्यर्थः। *परवल्लिङ्गतेति। एवं सति नपुंसकत्वं स्यात्। हरदत्तोक्तं दूषयति-तत्प्रकृतेत्यादिना। *नञो जरमरेति। यदि तु न मित्रममित्र इति नञ्समासस्तदा न"नञो जरमरमित्र" (पा०सू० ६-२-११६ ) इत्यस्य प्राप्तिस्तस्य बहुव्रीहिसमासे प्रवृत्तेरिति बोध्यम्।

*कुसुमाभिधायित्वेऽपीति। वस्तुतः कुसुमाभिधायित्वेऽपीत्यर्थः। यदि तु कुसुमविशेषाभिधायकोऽयं न तु कुसुमशब्दशक्यतावच्छेदकावच्छिन्नशक्त इति विभाव्यते तदा त्वपूर्वमेवोभयलिङ्गत्वाभिधानमिति। *मतान्तरेण=जलजशब्दस्य जलजातकुसुमान्तराभिधायकत्वमित्यभिप्रायकमतान्तरेणेत्यर्थः।

आहवसंग्रामौ पुंसि ( लिं० सू० १५९ )। एतयोर्युद्धाभिधायकत्वान्नपुंसकत्वे प्राप्ते। एवमाजिशब्दोऽपि।

*फलजातिः( लिं० सू० १६१ )इति। फलपदोपादानाद् वृक्षपरस्यामलकीशब्दस्य स्त्रीत्वेऽपि न क्षतिः।

*हरीतकीति। हरीतक्याः फलानि हरीतक्यः। "हरीतक्यादिषु व्यक्तिः" (का० वा०)इति स्त्रीत्वाभिधानात्।

*रथाङ्गादाविति। आदिना देवनाक्षपरिग्रहः॥ इति नपुंसकाधिकारः।

## अथ स्त्रीपुंसाधिकारः।

स्त्रीपुंसयोः ( लिं० सू० १७० )। अधिकारोऽयम्। *नपुंसकश्चेति। [illegible]ति। [illegible] स्त्रीपुंसयोः। इति स्त्रीपुंसाधिकारः।